# शोधलेखावली

डॉ० हरिनारायण दीक्षित
एम० ए०, पी-एच० डी०, डी० लिट्०,
व्याकरणाचार्य, साङ्ख्य-योगाचार्य, साहित्याचार्य, साहित्यरत्न
संस्कृतविभागाध्यक्ष
कुमायूं विश्वविद्यालय, नैनीताल (उत्तर प्रदेश)

ईस्टर्न बुक लिकर्स
दिल्ली (भारत)

# ŚODHALEKHĀVALĪ




By

DR HARI NARAYAN DIKSHIT

M A, Ph D, D Litt.,

Vyakaranacharya, Sankhyayogacharya, Sahityacharya, Sahityaratna

Head of the Department of Sanskrit
Kumaun University, Nainital (U P)

Eastern Book Linkers

DELHI (INDIA)

संस्कृतवाङ्मय के

निष्पक्ष समीक्षकों,

शिक्षकों, जिज्ञासुओं,

अधिकारियों तथा प्रेमियों

को यह शोध-लेखायनी

सादर समर्पित है।

# प्राक्कथन

विधाता की सृष्टि के रहस्य को जानने के लिए जिस प्रकार वैज्ञानिक प्रयत्नशील रहता है, कवि की सृष्टि के मर्म को समझने के लिए उसी प्रकार समीक्षक भी जुटा रहता है। समीक्षक की इसी साधना के फलस्वरूप संसार में समाज के समक्ष साहित्य के 'सत्यं शिवं सुन्दरम्' का स्वरूप उद्घाटित होता है, जिससे सहृदय सामाजिक अवश्य ही लाभान्वित होता है और साहित्य स्रष्टाओं को भी प्रेरणा अथवा किसी न किसी रूप में दिशानिर्देश मिलता है।

संस्कृतवाङ्मयरूपी भाग्यवृक्ष की विशालता, सघनता तथा उपयोगिता किसी भी प्रबुद्ध मनीषी से कभी छिपी नहीं रही है। किन्तु फिर भी कुछ लोग इसे नष्ट करने में अपनी सारी ताकत लगाए हुए हैं। पहले तो ये लोग इसकी शाखाओं को नष्ट कर रहे थे, पर इससे ये जब इसे नष्ट नहीं कर पाए, तो अब ये इसकी जड़ को जल्दी से जल्दी काटने में लग गए हैं। पता नहीं, ऐसा ये अपने किस प्रयोजन की सिद्धि के लिए कर रहे हैं? किन्तु यह सच है कि ऐसा करके ये लोग एक बहुत बड़ी ऐतिहासिक तथा राष्ट्रीय हानिकारक भूल कर रहे हैं। मेरा इनसे अनुरोध है कि भारतराष्ट्र के हित में ये 'ऐसा' नहीं करें, और संस्कृतवाङ्मय की विविध अपार तथा उपयोगी सम्पत्ति को देखें, परखें, उसे संवर्धित एवं परिवर्धित होने दें, तथा उससे अपने समग्र भारतराष्ट्र को लाभान्वित और गौरवान्वित होने दें।

यह मेरा सौभाग्य है कि बचपन से ही मुझे संस्कृतभाषा को सीखने-समझने और पढ़ने लिखने का शुभ अवसर मिला। आगे चलकर तो मुझे इसमें अपनी मातृभाषा जैसा सुख भी मिलने लगा। देवीकृपा एवं गुरुकृपा से जब मैं उच्चशिक्षाजगत् में संस्कृत भाषा का प्राध्यापक बना, तो इस (भाषा) में लिखे गए विविध ग्रन्थों का समीक्षात्मक स्वाध्याय करने का मुझे विशेष अवसर मिला। फलस्वरूप अपने स्वाध्याय के अनुरूप इसी बीच मैं सोत्साह कुछ

लेख भी लिखता रहा हूं, और उन्हें अपने देश की सम्मानित शोधपत्रिकाओं में प्रकाशित भी कराता रहा हूँ। किन्तु इधर-उधर बिखरे हुए रहने की अपेक्षा धागे में पिरोए हुए पुष्प अधिक रोचक, अधिक उपयोगी तथा अधिक प्रभावशाली होते हैं और इसीलिए उन्हें 'पुष्पहार' की सुन्दर संज्ञा दी जाती है, बस, इसी भावना से सम्प्रेरित होकर इस वर्ष मैं अपने उन्हीं शोधलेखों को 'शोधलेखावली' नाम देकर पुस्तक रूप में एकत्र प्रकाशित कराके संस्कृत वाङ्मय के विद्वानों, समीक्षकों, कर्णधारों तथा उपासकों की सेवा में पहुंचा रहा हूं, और ऐसा करके मैं अपने मन में अमन्द आनन्द का भी अनुभव कर रहा हूं। मुझे आशा है कि उन्हें मेरे ये शोधलेख पसन्द आएंगे और इनसे संस्कृत भाषा की समीक्षा-सम्पत्ति में कुछ वृद्धि भी होगी।

श्री श्यामलाल मल्होत्रा (प्रोप्राइटर, ईस्टर्न बुक लिंकर्स, न्यू चन्द्रावल रोड, जवाहरनगर, दिल्ली-७) के प्रति मैं अपने हार्दिक धन्यवाद प्रकट करता हूं जिन्होंने मेरे इन शोधलेखों को उत्साहपूर्वक पुस्तक का सुन्दर स्वरूप प्रदान किया। यद्यपि इस पुस्तक के शुद्धमुद्रण हेतु पर्याप्त उपाय किए गए थे, लेकिन फिर भी मेरी दूरस्थितिवशात् इसमें यत्र-तत्र कुछ अशुद्धियां रह गई हैं। विद्वान् तथा सहृदय पाठकों से मेरी प्रार्थना है कि इस प्रेमापराध के लिए वे मुझे क्षमा करें।

नैनीताल
७ जुलाई १९८६

—हरिनारायणदीक्षित

# शोधलेखसूची


| | | |
|---|---|---|
| १ | गुणालङ्कारभेदमीमांसा | १ |
| २ | वैदिकवाङ्मये अलङ्काराः | ६ |
| ३ | संस्कृतसाहित्य में उपन्यास धनपाल की तिलकमञ्जरी के परिप्रेक्ष्य में | २० |
| ४ | मूलशङ्कर याज्ञिक एक राष्ट्रीय संस्कृतनाटककार | ३१ |
| ५ | शिवराजविजये राष्ट्रियभावना | ५० |
| ६ | भाति मे भारतमितिकाव्ये राष्ट्रियभावना | ५६ |
| ७ | वाल्मीकीयरामायण में राष्ट्रियभावना | ६० |
| ८ | कालिदास के काव्यों में राष्ट्रियभावना | ६७ |
| ९ | मम्मट एवं भिखारीदास के काव्यशास्त्रीय विचारों का तुलनात्मक अध्ययन (काव्य के प्रयोजन तथा हेतुओं के सन्दर्भ में) | ७१ |
| १० | 'जयभारतभूमे' काव्यस्य मूल्याङ्कनम् | ८० |
| ११ | अर्वाचीनसंस्कृतसाहित्ये राष्ट्रियभावना | ८८ |
| १२ | देशभक्ति के सन्दर्भ में संस्कृत के आधुनिक काव्यकार | ९६ |
| १३ | मेघदूत में अभिव्यक्त राजतन्त्र की कठोरता | १०७ |
| १४ | गीता की एक ग्रन्थि | १११ |
| १५ | श्रीमद्भागवत में राष्ट्रियभावना | ११६ |

१६ कुमाऊँ के खेलदेवता ११६

१७ महाकवि कालिदास का हिमालय १२५

१८ हनुमान् की राजनीतिनिपुणता
वाल्मीकीय रामायण के परिप्रेक्ष्य में १३४

१९ गीतिकाव्य के निकष पर गीतगिरीशम् १४६

२० अलङ्कारशास्त्रोद्भवप्रसङ्गे दिव्यसिद्धान्तनिरास
प्राचीनताप्रकाशश्च १५६

२१ संस्कृतदृश्यकाव्यानां भरतवाक्येषु स्वदेशानुराग. १६१

# गुणालङ्कारभेदमीमांसा

माधुर्यादिषु गुणेषु उपमादिषु चालङ्कारेषु भेदो वर्त्तते नवेति विषयमादाय बुधेषु भूयान् विवादो विद्यते। अस्मिन् विषये श्रीभामहभट्टोद्भट-वामन-आनन्दवर्धन-मम्मटादिभि अनेकैरालङ्कारिकैं विमर्शो विहितोऽस्ति। सर्वप्रथम-मह ध्वन्यालोककारस्य श्रीमदानन्दवर्धनाचार्यस्य अभिप्राय प्रदर्शयामि। स लिखति ध्वन्यालोके द्वितीयोद्योते पष्ठ्या कारिकायाम्—

"तमर्थमवलम्बन्ते येऽङ्गिन ते गुणा स्मृता ।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्या कटकादिवत् ।"

अयमाशयो यत् लोके यथा शौर्यादयो गुणा समवायसम्बन्धेन आत्मानमेव समाश्रयन्ते, तथैव काव्ये अङ्गित्वेन ( प्राधान्येन ) राजमान रसमेव ये अव-लम्बन्ते, ते माधुर्यादयो गुणा सन्ति। एवञ्च लोके यथा कटककुण्डलादयो-ऽलङ्कारा सयोगवृत्या शरीरस्य अवयवानेव आश्रयन्ते, तथैव काव्ये अङ्गत्वेन दृश्यमान शब्दमर्थमेव वा ये समाश्रयन्ते, ते उपमादयोऽलङ्कारा मन्यन्ते। एव रीत्या गुणालङ्कारयो स्पष्ट पार्थक्य प्रतिपादयता श्रीमता तत्रभवता आनन्द-वर्धनाचार्येण निर्णीतमस्ति यद्—

१ माधुर्यादयो गुणा रसधर्मा भवन्ति।

२ अनुप्रासोपमादयोऽलङ्कारा शब्दार्थधर्मा सन्ति।

३ अत आश्रयभेदेन गुणालङ्कारयो भेदो दुर्वार एव ज्ञेय।

## अभेदवादिनो भट्टोद्भटस्य मतम्

भट्टोद्भटेन स्वविरचिते भामहविवरणे प्रतिपादितमस्ति यद् गुणालङ्कारयो कश्चिद् भेद एव नास्ति। तस्यायमाशयोऽस्ति यत् समवायवृत्त्या आत्मनि तिष्ठन्त शौर्यादयोगुणा, सयोगवृत्त्या च अवयवेषु स्थान लभमाना कटक-कुण्डलादयोऽलङ्कारा यथा आश्रयभेदेन भिन्नभिन्ना मन्यन्ते, तथैव समवाय-

वृत्त्या रसे वसन्तो माधुर्यादयो गुणा, संयोगवृत्त्या च शब्दार्थेषु वसन्तोऽनुप्रासोपमादयोऽलङ्कारा अपि भिन्नभिन्ना मन्तव्या इति चेत्कश्चिद् गुणालङ्कारभेदवादी वदेत्, तर्हि तन्न स्वीकरणीयमस्ति। यतोहि लौकिकेषु शौर्यादिषु गुणेषु तथा कटककुण्डलादिषु अलङ्कारेषु आश्रयभेददर्शनात् जगति भवतु नाम तावद् भिन्नत्वम्, किन्तु काव्यजगति प्रसिद्धाना माधुर्यादिगुणाना तथा अनुप्रासोपमादीनामलङ्काराणाम् उभयेषामपि समवायवृत्त्यैव काव्ये अवस्थानात् तेषु भेदबुद्धिर्नैव करणीया। पुनरपि यदि कोऽपि भेद पश्येत्, तर्हि गड्डलिकाप्रवाहेणैव तदीया सा भेदबुद्धिरस्ति। अतस्सा आदरणीयता नार्हति।

## भेदवादिवामनाचार्यमतम्

श्रीमता वामनाचार्येण महता विस्तरेण गुणालङ्काराणाम् अवस्थिति पृथक् पृथक् निर्धारितास्ति। स लिखति स्वकीयस्य काव्यालङ्कारसूत्रस्य तृतीयाधिकरणे प्रथमाध्याये—

१ "काव्यशोभाया कर्त्तारो धर्मा गुणा" (३।१।१)।

२ "तदतिशयहेतवस्त्वलङ्कारा" (३।१।२)।

३ "पूर्वे गुणा नित्या" (३।१।३)।

श्रीवामनाचार्यस्य आशयोऽस्ति यद् ये शब्दार्थधर्मा काव्यशोभा उत्पद्यन्ते ते माधुर्यादयो गुणा एव सन्ति, न तु ते कदापि अनुप्रासोपमादयोऽलङ्कारा भवन्ति। यतोहि अलङ्कारास्तु काव्यशोभायाम् आधिक्यमात्र सम्पादयन्ति, ता शोभामुत्पादयितु तु गुणा एव क्षमन्ते। न केवल तावदेतावदेव, अपितु माधुर्यादीना गुणाना काव्ये अनिवार्या स्थितिर्भवति। यतोहि तान् विना काव्यशोभा एव न भवति। किन्तु अलङ्काराणा प्रयोगस्तु नितरामैच्छिको भवति। यतोहि अलङ्काराणाम् अभावेऽपि काव्यशोभा न क्षीयते।
तन्मतस्य अय सार —

१ गुणा काव्यशोभाविधायका स्वरूपाधायका वा भवन्ति।

२ अलङ्कारास्तु केवलम् उत्कर्षाधायका भवन्ति।

३ काव्ये गुणा अपरिहार्या भवन्ति।

४ काव्ये अलङ्कारा ऐच्छिका भवन्ति।

## अथ श्रीमम्मटाचार्यमतम्

ध्वन्यालोककारस्यैव मतं समर्थयमानेन श्रीमम्मटाचार्येण भट्टोद्भटस्य अभेदपक्षस्तु नितरां खण्डितोऽस्ति, सहैव 'काव्यशोभायाः कर्तारो धर्मा गुणाः' इति सूत्रे वामनाचार्यप्रतिपादितं गुणानां काव्यशोभाकर्तृत्वमपि प्रत्याख्यातमस्ति। किन्तु 'पूर्वे गुणा नित्याः' इति सूत्रे वामनाभिमतं गुणानां नित्यत्वं सहर्षमङ्गीकृतमस्ति। स लिखति स्वीये काव्यप्रकाशे अष्टमोल्लासे—

"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥"

किन्तु—

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥"

### गुणविषये तदाशयः

१ गुणा आत्मनः शौर्यादय इव रसस्यैव धर्माः सन्ति।

२ गुणा रसे अचलस्थितयः (अनिवार्याः) तथा उत्कर्षाधायका धर्माः सन्ति।

३ गुणा वर्णार्थानां धर्मा न भवन्ति। यदि च कदाचिद् भवन्त्यपि, तर्हि गुणावृत्त्या एव भवन्ति।

### अलङ्कारविषये तदभिप्रायः

१ अलङ्कारा काव्ये विद्यमानं रसं यदा-कदा उपकुर्वन्ति।

यथा—

"अपसारय घनसारं कुरु हारं दूर एव किं कमलैः?
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला॥"

इत्यादौ वाचकमुखेन, तथा

"मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती॥"

इत्यादौ वाच्यमुखेन अलङ्कारो रसमुपकुरुते ।

२ अलङ्कारा काव्ये विद्यमानं रसं यदा-कदा नाप्युपकुर्वन्ति
यथा—

"चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विकसति दिङ्मुखेषु ।
वचने वर्त्तते प्रवर्त्तते काव्यबन्धे
ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥"

स्पष्टमस्ति यदत्रत्योऽनुप्रासः शृङ्गारं न पुष्णाति ।

३ अलङ्कारा काव्ये रसाभावात् केवलम् उक्तिवैचित्र्यहेतवो भवन्ति ।
यथा—

"मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥"

अस्मिन् पद्ये विद्यमाना उपमा उक्ति-वैचित्र्यमेव सम्पादयति, प्रकृते विप्रलम्भशृगारे तु सा प्रातिकूल्यमेव वितनोतीति सहृदयानां प्रत्यक्षमेव ।

४ अलङ्कारा सदैव वर्णार्थानां धर्मा भवन्ति ।

५ अलङ्कारा काव्ये अनिवार्या न भवन्ति ।

एवमुपर्युक्तया युक्त्या गुणालङ्काराणां भेदं स्पष्टीकृत्य भट्टोद्भटस्य अभेदवादिपक्षप्रत्याख्यानपुरस्सरं वामनाचार्याभिमतं 'गुणानां काव्यशोभायाः कर्तृत्वं' खण्डयन् मम्मटो वक्तुकामोऽस्ति यद् यदि वामनानुसारेण गुणा एव काव्यशोभाकारका मन्येरन्, तदा अयमपि प्रश्नः समुदेति यत् 'समस्तैः गुणैः काव्यशोभा भवति, उताहो कतिपयैः ? इति' । यदि च समस्तैः गुणैः काव्यशोभा मन्येत, तर्हि गौडी पाञ्चाली च रीती काव्यस्यात्मा नैव भवितुं शक्नुतः । यतोहि अनयोः सर्वे गुणा न भवन्ति । एवञ्च 'रीतिरात्मा काव्यस्य' इति वामनोक्तमेव नहि सगच्छते । अथ यदि कतिपयैः गुणैः काव्यशोभा अङ्गीक्रियते, तर्हि 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यत्रापि ओजोगुणस्य विद्यमानत्वात् काव्यत्वं मन्तव्यं भविष्यति, यद् वस्तुतोऽत्र असत्यैव नहि । विपरीतदशायां तु—

"स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ।।"

इत्यत्र गुणाभावे सत्यपि काव्यत्वं नयनविषयीभवति । एतस्मादधेतो वामनाभिप्रेतं गुणानां काव्यशोभाकर्तृत्वं नितरां निन्दनीयमेव धीधनैरिति श्रीमम्मटाचार्याशयो नास्ति केषामपि शेमुषीजुषामविदितं ।

इत्थमहं विविधं विचिन्त्य इममेव निष्कर्षं लभे, यद् ध्वनिकारप्रकाशकारयोरेव कथनं सुसंगतं विद्यते । तदनुसारेण गुणालङ्कारभेदमीमांसां संक्षेपेण प्रस्तौमि—

| गुणाः | अलङ्काराः |
|---|---|
| १ रसधर्माः । | १ शब्दार्थधर्माः । |
| २ अनिवार्याः । | २ ऐच्छिकाः । |
| ३ सदा रसोत्कर्षकाः । | ३ (क) यदा-कदा रसोत्कर्षकाः ।<br>(ख) यदा-कदा रसापकर्षकाः ।<br>(ग) यदा कदा उक्तिवैचित्र्यमात्रावहाः । |

सम्प्रति अहं विश्वसिमि यदेतावता विवेचनेन गुणालङ्कारभेदो विशदं स्पष्टीभूतो भवेत् । अतोऽग्रे 'विद्वत्स्वलं पल्लवितेन' इति धिया विस्तराद् विरमामि* ।

* यह शोध लेख डी एस बी रजत जयन्ती पत्रिका (नैनीताल), १९७६-७७ तथा उदीची (नैनीताल) १९८६।२ मे प्रकाशित है ।

# वैदिकवाङ्मये अलङ्काराः

यद्यपि काव्यशास्त्रस्य वेदशास्त्रेण सह कोऽपि साक्षात्सम्बन्धो न दरीदृश्यते, यतो हि प्रभुसम्मितशब्दप्रधानेभ्यो वेदशास्त्रेभ्यः शब्दार्थयोर्गुणभावेन रसाङ्गभूत-व्यापारप्रवणतया विलक्षणस्य लोकोत्तरवर्णनानिपुणस्य कान्तासम्मितोपदेश-दायकस्य काव्यस्य शास्त्रं सर्वथा भिन्नमेवास्ति, तथा शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिष-छन्दोनामभिः षड्भिर्वेदाङ्गभूतशास्त्रैरपि सह काव्यशास्त्रस्य न क्वापि साक्षात् सङ्गतिर्नयनपथमवतरति, तथापि 'देवस्य पश्य काव्यं न ममार न जीर्यति'[1] इत्यथर्ववेदवचो विचिन्त्य एवञ्च तत्कर्तृकृते 'कविर्मनीषी परिभूः स्वयम्भूः' इत्यृग्वेदस्य अंशे समुपलब्धं कविशब्दं विश्लिष्य वेदानामपि अजरामरकाव्यत्वसिद्धौ सत्यां तत्रापि काव्यत्वदर्शनाभिलाषो विदुषां विलसति-तराम्। प्राचां भारतविदुषामपि इदमेव तात्पर्यमासीद् यदशेषाणां सत्यविद्यानां प्रादुर्भावविकासौ वेदेभ्य एव भूतवन्तौ स्तः। एतादृशं किमपि ज्ञानं नास्ति सम्प्रति यस्य मूलं वेदेषु न भवेत्। विण्टरनित्स-मैक्समूलर-पीटरपिटर्सन-याकोबि-रायप्रभृतयो नूत्ना पाश्चात्यविपश्चिदपश्चिमा अपि ऋग्वेदं विश्व-साहित्यस्य प्राचीनतमं ग्रन्थं मन्यन्ते। वेदशब्दोऽपि ज्ञानार्थक एवास्ति। अस्माद्धेतोः संसारस्य सर्वविधं नाम ज्ञानं ज्ञानप्रकारो वा वेदेषु लब्धुं शक्यते।

भारतीय ज्ञान-सूर्योऽपि ऋग्वेदकाले एवोदयं प्राप्तवानासीत्। अहं सर्व-प्रथमं तु ऋग्वेदस्य ऋक्ष्वेव प्रारम्भिकीं साहित्यिकीं सुषमामवलोकयामि। आस्माकीना पूर्वजा उद्दामिन्या निरङ्कुशाया प्रकृतेरमुक्ते मनोहरे प्राङ्गणे निवासं कुर्वन्ति स्म। अतः काले काले प्रकृतिः स्वीयकृपाकोपाभ्यां तान् प्रभावयति स्म। तदानीं प्रकृतिप्रभावितास्ते पूर्वजाः प्राकृतिकीं शक्तिं तस्याः

---

1 अ० वे० १०।८।३२

कृपावृद्धये कोपशान्तये वा एकाग्रमनसा स्तुवन्ति स्म। हृदयान्तरालात् विनिर्गतास्तेषां ताः स्तुतयो भृशं मार्मिक्यः सौन्दर्यवत्यश्च भवन्ति स्म। अत एव तत्र सर्वत्रानायासेनैवागतं स्वाभाविकं काव्यत्वं विदुषां मनोहरणाय कल्पतेतरामेव।

केषाञ्चिद् विदुषां तु कथनमस्ति यद् वेदेषु ध्वनि-गुण-रस-रीत्यलङ्काराः सर्वे एव काव्यशोभाधायका भेदाः सन्ति, एवञ्च तैः रूपक-उत्प्रेक्षा अतिशयोक्ति-व्यतिरेक श्लेषादीनामलङ्काराणां तु केचित् सङ्केता अपि प्रदर्शिताः सन्ति[२], किन्तु डॉ० एस० के० डे—महोदयाय वेदेष्वलङ्कारबाहुल्यदर्शनं नैव रोचते[३]। अयं महोदयो वेदेषु काव्यत्वमलङ्कारवत्त्वं वा मन्यते तु, किन्तु काव्यत्वस्यालङ्कारवत्त्वस्य वा तत्र किमपि विशिष्टं महत्त्वमुररीकर्त्तुमयं न सज्जितो भवति।

मामकीना अल्पीयसी शेमुषी त्विदमेव निश्चेतुमीहते यल्लौकिकसंस्कृतकविताकामिनीकान्तकलेवरक्रान्तमानसाः कालिदासीयोपमामाधुरीमत्ता महाकविदण्डिपदलालित्यलीनचेतसो बाणभट्टीयरसभावपेशलतापाशबद्धा भावुका सहृदयहृदयाः सुकुमारमतयो विपश्चितो भवन्तु नाम वेदवाङ्मये काव्यमाधुरीप्राप्तिप्रयत्ने व्यर्थपरिश्रमाः, किन्तु निर्विशेषमतयो विद्वांसस्तु तत्रापि स्थाने स्थाने काव्यात्मकं सौन्दर्यं नयनपथातिथीकर्त्तुं प्रभवन्त्येव।

अथाहं कतिपयान्येतादृशान्युदाहरणानि प्रस्तुतीकरोमि, यानि वैदिकवाङ्मयेऽलङ्काराणामव्याजमनोहरीं हृत्तन्त्रीझङ्कारिणीं सत्तां सूचयितुमेव नहि, अपि तु निर्धारयितुमपि क्षमन्ते।

---

२ (क) आचार्यविश्वेश्वरः स्वकृतकाव्यप्रकाशटीकाभूमिकायाम्।

(ख) पी० वी० काणे—महोदयः स्वकृते 'हिस्ट्री आफ संस्कृत पोइटिक्स' ग्रन्थे हिन्द्यामनूदिते ४०५-४०८ पृष्ठेषु।

(ग) श्री एम्० एम्० डिवेकर, 'ले फ्योर द रेतोरिक द लोद' नाम्नो ग्रन्थस्य द्वितीयपरिच्छेदे। अयं ग्रन्थः पेरिसे १९३० ख्रिष्टाब्दे प्रकाशितोऽस्ति।

३ दृश्यतां तस्य 'हिस्ट्री आफ संस्कृत पोइटिक्स' ग्रन्थस्य प्रथमभागे ३४१ तमं पृष्ठम्।

सर्वप्रथम सर्वालङ्काराणां मूलभूता[4] उपमा[5] एव भव नयनयोरुपहारी-क्रियते । यथा—'सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्'[6] इति ।

अत्राय भाव — सरणशील सूर्यो देदीप्यमानाम् उषसं तथैव अनुधावति अनुसरति वा, यथा (रिरंसु) मनुष्य सुन्दरीं युवतिमनुसरति । अत्र ऋषिदृष्टौ सूर्य उपमेय तस्य मनुष्य उपमानम्, एवमेव उषा उपमेया, तस्या युवति (योषा) उपमानम्, इवार्थको वैदिक 'न' शब्द एवोपमावाचक शब्द, अनुधावनमनुसरणं वा साधारणधर्म । विचार्यतां नाम तावद् यदत्रोपमाया सर्वेषामेवाङ्गाना विद्यमानत्वात् पूर्णोपमा नैषा सचेतसा मनो नाहरति ?

यथा वा—

परा हि मे विमन्यव पतन्ति वस्य इष्टये । वयो न वसतीरुप[7] ॥

अस्यामृचि ऋषे शुन शेपस्य मन्युरहिता बुद्धयो वसुमते जीवनाय तथैव परापतन्ति, यथा पक्षिणो नीडाय परापतन्ति । अत्राप्युपमेयोपमानभावो हृदय-हर प्रतिभाति । यथा बुद्धय उपमेया, तासा पक्षिण उपमानम्, इवार्थको 'न' शब्द एवात्राप्युपमावाचक शब्दोऽस्ति, परापतन प्रत्यावर्तनं च साधारणधर्मो दृश्यते ।

यथा वा—

प्रतद्विष्णु स्तवते वीर्येण मृगो न भीम कुचरो गिरिष्ठा ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥[8]

---

४ उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्याङ्गे नृत्यन्ती तद्विदा चेत ॥
(अप्पयदीक्षित, चित्रमीमासायामुपमानिरूपणारम्भे)

५ "सादृश्य सुन्दर वाक्यार्थोपस्कारकमुपमालङ्कृति"—(पण्डितराज-जगन्नाथो रसगङ्गाधरे)

६ ऋग्वेद, १।११५।२

७ ऋग्वेद, १।१६।४

८ ऋ० सं० १।१५४।२

अस्मिन् मन्त्रे तु श्लेषपुष्टोपमाया सौन्दर्यं हृदयहरत्व वा दर्शनीयताया सीमानमेव स्पृशति, हृदयतन्त्र्याश्च ताराणि झङ्करोति ।

ऋचो भावोऽस्ति यद् भीम आकृत्यैव भयङ्कर, कुचर कुत्सित जीवघात-पुरस्सर चरति य स कुचर कुत्सिताचरणशील, गिरिष्ठा पर्वतादिप्रदेशवर्त्ति-गह्वरवासी मृग सिंह इव भीम शत्रुभयद कुचर =कुषु सर्वासु भूमिषु (त्रिषु लोकेष्विति भाव) चरति य स कुचर सर्वव्यापी, गिरिष्ठा गिरि=मन्त्र-रुपाया वाचि तिष्ठति य स गिरिष्ठा (सप्तम्या अलुक) विष्णुर्वीर्येण (हेतुना) सर्वै स्तूयते ।

अत्र विष्णु उपमेय, तस्य मृग (सिंह) उपमानम् । सादृश्यार्थको वैदिको 'न' शब्द एवोपमावाचक शब्द, तथा स्तुतिविषयता एवोभयो साधारणधर्म । भीमत्व कुचरत्व गिरिष्ठत्वञ्च श्लेषसाहाय्येनोभयधर्मोणि सन्ति ।

यथा वा—

'रथीव कशयाश्वाँ अभिक्षिपन् आविर्दूतान् कृणुते वर्ष्यां अह'[९]

एष भाव – यथा रथी कशया अश्वान् अभिक्षिपन् प्रेरयन् स्वदूतान भटान् आविष्कुरुते, तद्वदेव असौ पर्जन्योऽपि मेघान् प्रेरयन् वर्ष्यान् वर्षण-शीलान् तान् मेघान् दूतान् इव आविष्कुरुते ।

अत्र पर्जन्य उपमेय, तस्य रथी उपमानम् । एवमेव मेघा उपमेया, अश्वा उपमानम् । इवशब्द उपमावाचक, आविष्करणमुभयो साधारणधर्म ।

यथा वा—

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ।।[१०]

अस्याम् ऋचि तिमिरमपाकुर्वती दिवो दुहिता मनोहरी उषा स्नातोत्थिता समलङ्कृता युवतिरिव प्राच्यामुदेति । उदीयमानाया उषसो देव्या उपमा स्नातोत्थितया अलङ्कृतया युवत्या सह अतीव मनोहरी भाति ।

यथा वा—

'इमा उ त्वा पुरुवसोऽभि प्र नोनुवुर्गिर । गावो वत्स न धेनव'[११] ।

---

९ ऋ० स० ५।८३।३

१० ऋ० स० ५।८०।५

११ सामवेद पूर्वार्चिक, २।५।२

ऋषेराशयोऽस्त्यस्यामृचि यत् हे इन्द्र ! यथा धेनवो गावो वत्सं प्रमोदयन्ति, तथैव मत्कर्तृका इमा स्तुतिवाचो भवन्तं प्रमोदयन्तु।

अत्र स्तुतिवाच उपमेयाः, तासां गाव उपमानम्, एवमेव इन्द्र उपमेयः, तस्य वत्स उपमानम्, वैदिको 'न' शब्द उपमावाचकः शब्दः, तथा प्रमोदनं साधारणधर्मः। उपमायाः सर्वाङ्गानामत्र सत्त्वात् पूर्णोपमा मोदयति मनीषिणां मनः।

यथा वा—

अयमु ते समतसि कपोत इव गर्भधिम्। वचस्तच्चिन्न ओहसे[12]

अयं भावो यद् यथा कपोतः सत्वरं स्वकपोतीं प्राप्नोति, तथैव इन्द्रोऽपि सत्वरं स्वयज्ञं (स्वयज्ञवेदिम्) प्राप्नोति। अत्रापि उपमानोपमेयाद्युपमावयवा न कस्यापि तद्विदां निगूढाः।

न केवला उपमा एव लभ्यते वेदेषु, अपि तु मालोपमा[13] अपि दरीदृश्यते—

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः[14]।

अत्रकस्या एव उषसश्चत्वारि उपमानानि राजन्ते।

अथाहमत्रैतादृशमुदाहरणं प्रस्तौमि यस्मिन् न केवलाया उपमाया एव चारुचिक्यता, अपि तु विरोधाभासस्यापि मनाग्भा सत्ता आन्दोलयति तद्विदां चेतः।

दृश्यताम्—

उत त्वः पश्यन् न ददर्श वाचम् उत त्वः शृण्वन् न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा[15]॥

अयं भावः—अनेके जना विद्यां पठन्ति, किन्तु तस्या रहस्यं न विदितं भवति, एवमेव अनेके जना वाचो रहस्यं शृण्वन्ति, किन्तु तेषां बुद्धौ तद् रहस्यं

---

१२ स एव, २।६।६

१३ "मालोपमा यदेकस्योपमानं बहु दृश्यते" (विश्वनाथः साहित्यदर्पणे १०।२६ पूर्वार्धे)।

१४ ऋ० म० १।१२४।७

१५ ऋ० म० १०।७१।४

स्फुरति नैव । किन्तु केचिदेतादृशो बुद्धिमन्तो भाग्यवन्तो वा सन्ति, येषां समक्ष वाणी स्वीय सर्वमपि गुप्तरहस्य तथैव प्रकटीकरोति यथा रिरसु अलङ्कृता पत्नी पत्यु समक्ष स्वीय सर्वस्व समर्पयति ।

अत्र वाग् उपमेया, तस्या उपमानमस्ति जाया, 'इव' शब्द एव उपमा-वाचक, आत्मसमर्पणमुभयो साधारणधर्मोऽस्ति ।

अत्र उपमानमतीव शृङ्गारप्रेरकमस्ति, किन्त्वस्ति हृद्यानवद्यम् ।

अस्या ऋच पूर्वभागे (उत त्व पश्यन् न ददर्श वाचम्, उत त्व शृण्वन् न शृणोत्येनाम्) विरोधाभासालङ्कारस्यापि महत्सुन्दरमुदाहरणद्वय वरी-वृत्यते । 'पश्यन्नपि न पश्यति', 'शृण्वन्नपि न शृणोति' इत्यहो कीदृशो मनोहरो विरोध ? एवञ्च परमरहस्यभूता सा वाक्, अत एव दृष्ट्वाप्येना न द्रष्टुम् (ज्ञातुम्) पारयति कश्चिद्, एवमेव श्रुत्वापि एना न श्रोतु प्रभवति कोऽपीति तत्परिहारोऽप्यत्याह्लादकरो मनोरमश्च ।

एतदनन्तर मया एका एतादृशी ऋक् प्रस्तूयते यस्यामतिशयोक्ति-अनुप्रास-विभावनाविशेषोक्तिनाम्ना चतुर्णामलङ्काराणा मनोहरी सत्ता पाठकाना मनासि हठादावर्जयति । दृश्यता सेयम्—

द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते ।
तयोरन्य पिप्पल स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति[१६] ॥

मन्त्रस्य भावोऽस्ति यत् शोभनपक्षवन्तौ सहनिवासिनौ सखायौ द्वौ पक्षिणा-वेकमेव वृक्षमधिश्रयन्तौ स्त । तयोरन्यतरस्तु वृक्षस्थित फल भुङ्क्ते, किन्त्वन्य फलम् अभुञ्जान एव स्वीय तेज प्रकटयतीति ।

वस्तुतस्त्वस्मिन् मन्त्रे दर्शनशास्त्रस्य ईश्वर जीव प्रकृतिसज्ञकाना त्रयाणा मूलभूताना तत्त्वाना प्रतिपादन रूपकालङ्कारस्य समाश्रयेण कृतमस्ति । यथा हि—ईश्वर प्रकृतिमाध्यमेन सृष्टिमुत्पादयति, जीवश्च तस्या सृष्टौ स्वकीय-कर्मानुसारेण सुखद दुखद वा फल भुङ्क्ते, किन्त्वीश्वर प्रकृतिज फलम-भुञ्जान एव सर्वं शास्ति सर्वं च द्योतयतीति भाव । परन्तु ऋषिणा मन्त्रे-ऽस्मिन्नीश्वर-जीव प्रकृतीना वर्णनम्, तेषा नामानि न गृहीत्वा पक्षिद्वयवृक्ष-नामभिर्विहितमस्ति । अहमाशङ्के यदस्यामृचि केचिद् विद्वासो रूपकालङ्कार सम्भाव्य अस्या इत्थम्भूता व्याख्या कर्तुकामा भवितु शक्नुवन्ति यत् प्रकृति-

१६ स एव, १।१६४।२०

रेकविशालवृक्षरूपा विद्यते। ईश्वरजीवावपि पक्षिद्वयरूपौ मतौ, तौ च पक्षिरूपौ ईश्वरजीवौ वृक्षरूपा प्रकृतिमाश्रयेते। तयोरीश्वरजीवयोरन्यतर एको जीवस्तु कर्मानुसारेण सुख दुःख वा अश्नाति, किन्त्वन्य पक्षी अर्थाद् ईश्वरस्तु फलमभुञ्जान एव सर्वत स्वीय सौन्दर्य तेजो वा वितनोतितराम्। किन्तु मह्य त्वत्र अतिशयोक्तिरेव रोचते, न तु रूपकम्। यतो हि मम मतेन रूपक-अतिशयोक्तिभेदिका सस्फुटा रेखा उपमेयस्य सत्ता असत्ता एव वर्तते, न त्वभेदप्रतीति। यतो हि सा तूभयत्र लभ्याऽस्ति। मामकोऽयं भावोऽस्ति यद् यत्रोपमेय शब्दोपात्त भवेत् तत्र रूपकमेव, न त्वतिशयोक्ति, यत्र चोपमेय शब्दोपात्त न भवेत्, अर्थात् तस्य दर्शनमेव न भवेत् केवलमुपमानमेव शब्दोपात्त स्यात्, तत्रातिशयोक्तिरेव ज्ञातव्या।

'मुखचन्द्र उदेति' इत्यत्र रूपकम्, यतो ह्यत्रोपमेयभूतस्य मुखस्य शब्दोपातता अर्थात् शब्दत उपादानम् (ग्रहणम्) विद्यते, किन्तु मुख निगीर्य, अर्थात् शब्दतोऽनुदीर्य 'चन्द्र उदेति' इति कथने त्वतिशयोक्तिरेव मान्यास्ति, यतो ह्यत्रोपमेयभूतस्य मुखस्य शब्दोपातता, अर्थात् शब्दत उपादानम् (ग्रहणम्) नैव विद्यते।

एव भूतया स्पष्टेक्षिकया विचारे विहिते सति दृश्यते यत् प्रकृते मन्त्रे परमात्मजीवात्मरूपोपमेयस्य (विषयस्य) दर्शनम् (शब्दोपातता) नास्ति। अत्र तु केवल पक्षिद्वयरूपोपमानमेव (विषयी एव) दरीदृश्यते। तेन च पक्षिद्वयरूपोपमानेनेश्वरजीवरूपोपमेयस्य सर्वथा निगरण विहितमस्ति। तस्मादत्रातिशयोक्तिरेव अङ्गीकर्तव्येति सुधी, न तु रूपकम्। श्रीमदप्पयदीक्षितैनैतादृशी अतिशयोक्ती रूपकातिशयोक्तिसञ्ज्ञया व्याख्यातास्ति[१७]।

न केवल तावदेतावदेव, अपि तु अस्मिन मन्त्रे 'सुपर्णा'-'सयुजा'-'सखाय'-'समान' 'परिषस्वजाते' इत्यादिशब्देषु सकारस्य अनुप्रासेन स्वर्णे सौरभसयोगोऽपि सम्पादितोऽस्ति। एवमेव मन्त्रस्थित 'अनश्नन्नन्य' इति स्थले नकारस्य पौन पुन्येन प्रयोगोऽपि सचेतसां चेतस्सु अनुप्रासस्य मधुरिमाण परिवर्धयन्नस्ति। अत्रैव च—अनश्नन् अन्य अभिचाकशीति' (अर्थात् फलम्

---

१७ रूपकातिशयोक्ति स्यान्निगीर्याध्यवसानत।

पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिता शरा॥ (कुवलयानन्दकारिका-३६)

अभुञ्जान सौन्दर्यं वितनोति) इति शब्दपुञ्जे विभावनालङ्कारस्यापि स्थिति-र्द्रढीयसी दरीदृश्यते। यतो हि यत्र हेतु विनापि कार्यं भवेत तत्र विभावना मन्यते[१८]। अत्र सौन्दर्यप्रकाशनरूपस्य कार्यस्योत्पत्ति सौन्दर्यहेतुभूतफलभक्षण विनैव वर्णिता। अतो विभावना दुर्निवाराऽस्ति।

एवमेव विशेषोक्तिरप्यस्मिन् मन्त्रे लोचनगोचरीभवति। यतो हि कारणे सत्यपि यत्र कार्योत्पत्तिर्न भवेत् तत्र विशेषोक्तिर्मन्यते[१९]। फलाभक्षण सौन्दर्याभावरूपकार्यस्य कारणमस्ति। अत्र 'अनश्नन्' इति पदेनेश्वरकर्तृक-फलाभक्षणरूपकारणे सत्यपि 'अभिचाकशीति' इति सौन्दयबोधकक्रियापदेन सौन्दर्य्याभावरूपकार्योत्पत्तेरभावो द्योत्यमानोऽस्ति। अतोऽत्र विशेषोक्तिर-लङ्कारोऽप्यपरिहार्योऽस्ति।

अपि च, अस्मिन मन्त्रे 'सयुजा' 'सखाया' इति विशेषणद्वयेन परमात्म-जीवात्मनोर्नित्यत्व सच्चिद्रूपत्वञ्चापि ध्वन्येते। अस्माद्धेतोरिमौ शब्दौ पदद्यो-त्यध्वनेरप्युदाहरण भवितुमर्हत। ईषद्विमर्शे कृते सत्येव चात्र माधुर्यगुणोऽपि स्फुटो भवन्नयनपद्धतिमवतरति।

इत्थमहमवलोकयामि यदस्यामेकस्यामेव ऋचि काव्यस्य भूयासि तत्त्वानि विलसन्ति, यानि सहृदयहृदयप्रीणनाय सर्वथाल सन्तीत्यत्र न केषामपि धीजुषा विसवाद सम्भवति। एवमेव अन्या अपीदृश्योऽनेका ऋचो वतन्ते यासु सुधिया काव्यतत्त्वावलोकनाभिलाष पूर्त्तिमेति। अत्र तासु कतिपया प्रस्तूयन्तेऽपि। यथा—

> चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
> त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्या आविवेश[२०]॥

स्पष्टमस्ति यदस्यामृचि व्यतिरेकातिशयोक्तिनामानावुभावलङ्कारौ राजे-तेतराम्।

---

१८ "विभावना विना हेतु कार्योत्पत्तिर्यदुच्यते"
(विश्वनाथ साहित्यदर्पण १०।६६ पूर्वार्धे)।

१९ "सति हेतौ फलाभावे विशेषोक्ति . ."
(विश्वनाथ साहित्यदर्पण १०।६७ पूर्वार्धे)।

२० ऋ० स० ४।५८।३

अस्मिन् मन्त्रे वैयाकरणानां ब्रह्मसहोदरस्योपमेयभूतस्य वर्ण्यस्य अर्थाद् विषयस्य 'शब्दस्य' अध्यवसानं निगरणं विलीनीकरणं वा एकेनोपमानभूतेन विषयिणा महता वृषभेण कृतमस्ति । उपमेयं नाम शब्दोक्तम्, अतोऽत्राति-शयोक्तिर्निर्बाधैव राजते ।

यदि च शृङ्गचतुष्टयवान् त्रिपात् सप्तहस्तयुक्तः शिरोद्वयसमेतः त्रिधाबद्धो-ऽयं वृषभः शृङ्गद्वयवतः चतुष्पदः एकशिरोवतः एकत्र बद्धस्य च लौकिकस्य वृषभस्य अपेक्षया विलक्षणो मन्येत, तदा तु व्यतिरेकालङ्कारमत्र[21] को नाम वारयितुमीष्टे ? एवमेव—'द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य'[22] इति ।

इत्यत्रापि द्वादशारम् ऋतचक्रमन्यलौकिकचक्रापेक्षया विलक्षणं सद् व्यतिरेकालङ्कारद्योतनाय कल्पतेतराम् ।

उदात्तसम्पद्वर्णनरूपस्य उदात्तालङ्कारस्योत्कृष्टमुदाहरणमपि[23] अथर्ववेदे तत्र लभ्यते, यत्र ऋषिणा भारतभूमेः स्वरूपं वैभवं महत्त्वञ्च समुपवर्णितानि सन्ति[24] । इदं स्थलमतीव हृदयहरं तथा देशभक्तिबीजाङ्कुरपोषकं विद्यते । एवमेव क्रियादीपकालङ्कारोऽपि[25] तत्र द्रष्टुं शक्यते[26] । परमेषोऽस्ति अपरिपक्वरूपेणैव ।

वर्णानुप्रासप्रियता च वैदिकेषु ऋषिषु बाहुल्येन दृश्यते । लौकिककाव्य-काराणामनुप्रासालङ्कारस्य[27] प्राणवती तनुस्तत्र नितरां परिस्फुटन्ती परि-

---

२१ "उपमानाद् यदन्यस्य व्यतिरेकः स एव सः" (मम्मट काव्यप्रकाशे) ।

२२ ऋ० म० १।१६४।११

२३ (क) "उदात्तं वस्तुनः सम्पत् ..." (मम्मट काव्यप्रकाशे) ।

(ख) लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥
(विश्वनाथ साहित्यदर्पणे १०।९४)

२४ अथर्ववेद, १२।१।३-१०

२५ "वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः" (अप्पयदीक्षित कुवलयानन्दे ४८ कारिकाया पूर्वार्धे) ।

२६ अथर्ववेद, १२।१।१

२७ (क) "वर्णसाम्यमनुप्रासः" (मम्मट काव्यप्रकाशे) ।

लक्ष्यते । तथाहि-

(क) रक्षाणो अग्ने तव रक्षणेभी रारक्षाण सुमख प्रीणान ।
प्रतिष्फुर वि रुज वीड्वंहो जहि रक्षो महि चिद् वावृधानम् ॥
(ऋग्वेदे ४।३।१४)

(ख) हंस शुचिषद् वसुरन्तरिक्षसद् होता वेदिषद् अतिथिर्दुरोणसत् ।
नृषद् वरसद् ऋतसद् व्योमसद् अब्जा गोजा ऋतजा अद्रिजा
ऋतम् ॥
(ऋग्वेद ४।४०।५)

(ग) धूरसि धूर्व धूर्वन्त धूर्व त योऽस्मान् धूर्वति त धूर्व य वय धूर्वाम ।
देवानामसि वह्नितम सस्नितम पप्रितम जुष्टतम देवहूतमम् ॥
(यजुर्वेदे १।८)

(घ) वेदोऽसि येन त्व देव वेद देवेभ्यो वेदोऽभवस्तेन मह्य वेदो भूया ।
देवा गातुविदो गातु वित्त्वा गातुमित ·· ·· ॥
(यजुर्वेदे २।२१)

(ङ) पवते हर्यतो हरि रति ह्वरांसि रंह्या ।
· · ॥ (सामवेदे उत्तरार्चिके २।६।४

(च) इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै ।
(अथर्ववेदे ६।९८।१)

(छ) पलालानुपलालौ शर्कुं कोक मलिम्लुच पलीजकम् ।
(अथर्ववेदे ८।६।२)

(ज) ओजश्च तेजश्च सहश्च बल च वाक् चेन्द्रिय च श्रीश्च धर्मश्च ।
ब्रह्म च क्षत्र च राष्ट्र च विशश्च त्विषश्च यशश्च वर्चश्च
द्रविण च ॥
आयुश्च रूप च नाम च कीर्तिश्च प्राणश्चापानश्च चक्षुश्च श्रोत्र च ।
पयश्च रसश्चान्न चान्नाद्य चर्त च सत्य चेष्ट च पूर्त च प्रजा च पशवश्च ॥
(अथर्ववेदे-१२।५।६-१०)

---

(ख) "अनुप्रास शब्दसाम्य वैषम्येऽपि स्वरस्य यत्" (विश्वनाथ साहित्य-दर्पणे १०।३ पूर्वार्धे) ।

प्रनीयते यल्लाटानुप्रासालङ्कारम्[२८], यमकालङ्कारञ्चापि[२९] विदन्ति वैदिका ऋषय , यतो हि यजुर्वेदस्य (१।३) + (१।३०) सन्दर्भस्थलयोरथर्ववेदस्य च (१४।२।५३–५८) स्थले लाटानुप्रासस्यापरिपक्व स्वरूपमुपलभ्यते । एवमेव ऋग्वेदस्य (५।२७।४) + (५।७६।२) स्थलयो , यजुर्वेदस्याष्टादशेऽध्याये तथा (२३।१६) स्थले, सामवेदस्योत्तरार्चिके (१।५।१) स्थले, अथर्ववेदस्य च (१२।२।१४) स्थले यमकालङ्काराङ्कुरा लोचनातिथीभवन्ति । उपरि प्रदर्शितेऽनुप्रासोदाहरणेषु 'ख'–'ग' इति सकेतितयोरुदाहरणयोरपि यमक समुपलभ्यते ।

ब्राह्मणग्रन्थेषु मूर्द्धन्यता गते शतपथब्राह्मणे हुतशब्दे (१।३।१।२५), वर्षशब्दे (२।२।३।७) महिषीशब्दे च (६।५।३।१) अनुभूयमान श्लेषालङ्कारो विदुषा ध्यानाकर्षणाय सर्वथालमेवास्ति ।

उपनिषत्स्वप्यलङ्कारवैभव दरीदृश्यते । तत्र उपमा-रूपक-अनुप्रास-विरोधाभाससदृशानामलङ्काराणा स्थितिश्चमत्करोत्येव सचेतसा चेतासि । दृश्यताम्—

> आसीनो दूर व्रजति शयानो याति सर्वत ।
> कस्त मदामद देव मदन्यो ज्ञातुमर्हति ॥
>
> (कठोपनिषदि—१।२।२१)

अत्र विरोधाभासो मनो रमयति सुधियाम् ,

रूपकस्य निदर्शन त्वतीव हृदयावर्जक विद्यते । शरीरावयवेषु रथावयवाना-

---

२८ (क) "शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रत" (मम्मट काव्यप्रकाशे)।

(ख) शब्दार्थयो पौनरुक्त्य भेदे तात्पर्यमात्रत ।
लाटानुप्रास .. ॥
(विश्वनाथ साहित्यदर्पणे (१०।७)

२९ (क) अर्थे सत्यर्थभिन्नाना वर्णाना सा पुन श्रुति ।
यमक . . . ॥ (मम्मट काव्यप्रकाशे)

(ख) सत्यर्थे पृथगर्थाया स्वरव्यञ्जनसहते ।
क्रमेण तेनैवावृत्तिर्यमक विनिगद्यते ॥
(विश्वनाथ साहित्यदर्पणे १०।८)

आरोप कियान् मनोहर इति दृश्यता तावत्—

आत्मान रथिन विद्धि शरीर रथमेव तु ।
बुद्धि तु सारथि विद्धि मन प्रग्रहमेव च ।।
इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिण ।।

(कठोपनिषदि—१।३।३-४)

अत्र आत्मनि रथिन, शरीरे रथस्य, बुद्धौ सारथे, मनसि प्रग्रहस्य, इन्द्रियेषु हयानाम्, विषयभोगेषु गोचरभूमिभागानामारोप, कथ्यता, कस्य साहित्यरस-मर्मज्ञस्य चेतश्चमत्कर्तुं नालम्? अथागम्यता कृपया, भवता समक्षमहमौपनिष-दीम् उपमामुपस्थापयामि—

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभि ।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्नि ।।

(कठोपनिषदि—२।१।८)

अत्र अरणिस्थितस्य अग्ने उपमा गर्भिणीस्थितेन गर्भेण सह दत्तास्ति। अग्निरुपमेय, तस्य गर्भ उपमानम्। यद्यप्यत्र काचित् सहृदयहृदयाह्लादकता न दरीदृश्यते, तथापि उपमाप्रयोगप्रवृत्ते अक्षुण्णताद्योतनाय इदमुदाहरण महिमशालि विद्यते। यथा वा—

अग्निर्यथैको भुवन प्रविष्टो रूप रूप प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूप रूप प्रतिरूपो बहिश्च ।।
वायुर्यथैको भुवन प्रविष्टो रूप रूप प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूप रूप प्रतिरूपो बहिश्च ।।
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषै ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुखेन बाह्य ।।

(कठोपनिषदि २।२।९-११)

दृश्यताम्, अत्र सर्वभूतान्तरात्मा उपमेयोऽस्ति, तस्य अग्नि-वायु सूर्या उपमानानि सन्ति, 'यथा' उपमावाचक शब्दो विलसत्येव, प्रतिरूपभवनशीलता च साधारणधर्मोऽस्ति। इद सर्वमेवोपमावैभव महता प्रदिम्ना प्रकाश्यमानोऽ-स्तीति सुधियो विदन्तु।

अथ मौण्डकोपनिषदो रूपकच्छविमपि नयनविषयीकुर्वन्तु भवन्त —

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत।**
**आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि[30]॥**

अत्राय भावो यदुपनिषद्रूपिणि धनुष्युपासनारूपिणं शरं निधाय भावनारूपिण्या शक्त्या आकृष्य ब्रह्मरूपं लक्ष्यं वेधनीयम्। कथयन्तु महाशया, उपनिषदि धनुष, उपासनाया शरस्य, भावनाया शक्ते, ब्रह्मणि लक्ष्यस्य च आरोपो वस्तुतश्चेतश्चमत्कारी अस्ति न वा ?

मम मतेन त्वत्र दृढाकाट्यसिद्धान्तवतीषूपनिषत्सु धनुरारोपो धनुषो दार्ढ्यं सूचयति, यल्लक्ष्याप्तये परमावश्यकं भवति धनुर्धरस्य कृते, उपासनाया दैनन्दिनपरिष्कारात् तत्रारोपितशरे तीक्ष्णताभिव्यज्यते, इयं शरतीक्ष्णतापि लक्ष्यवेधाय महत्त्वपूर्णा, भावनाया प्राबल्यं धनुराकर्षणसौविध्यद्योतनाय समर्थमस्ति। अक्षरपदेन 'न' क्षरति (नश्यति) यत् तद् अक्षरमिति व्युत्पत्त्या लक्ष्यस्य दुर्भेद्यतापि द्योत्यते। अतोऽहं ब्रवीमि यदत्र पदद्योत्यध्वनेरपि हृदयहरश्चमत्कारो राजतेतराम्।

## उपसंहार

एतावता गवेषणात्मकेन विश्लेषणेन मन्ये यद् वैदिकवाङ्मयेऽपि काव्यालङ्कारा सन्ति। किन्तु मदीयस्यास्य कथनस्येदं तात्पर्यं नास्ति यत्तत्रापि लौकिकसाहित्ये इवैवानेकविधा कविकल्पनाकल्पितकलेवरा अलङ्कारा सन्तीति। यतो हि वैदिकवाङ्मयकालिका ऋषयो निजाध्यात्मविषयकभावाभिव्यक्तये यथा प्रयासं चक्रु, न तथा स्वमानमकोमलकान्तकामकल्पनाकलाकौशलकीर्तये। अत एव तदा कृतिषु भावानामतिसारल्यनाभिव्यक्तिकरणाय सहजरूपेण प्रयोगविषयीविधीयमाना उपमा रूपक-व्यतिरेकातिशयोक्तिसदृशा अङ्गुलिगण्या कैचिदेवालङ्कारा समुपलभ्यन्ते, न तु सर्वविधा। एतेषामप्युपलभ्यमानानामलङ्काराणां तत्र यत्र क्वचिदेव प्रयोगो नयनावनिमवतरति, न तु बहुत्र, यतो हि तत्र भूयिष्ठस्तु अंशो निरलङ्कार एवास्ति। अनुप्रासास्तु ध्वन्यात्मकताधायकत्वात् सर्वेषामेव पुरातनानां नूतनानां च लेखकानामतिसहजोऽलङ्कारवन्ध। अतो नेदं विस्मयावहं यदि एष बाहुल्येन लभ्यते वेदेषु। आम्, इदन्तु अहं मनोबुद्धिभ्यामुभाभ्यामेवाङ्गीकरोमि यद् क्वचित् क्वचिद् उपमारूपकयो प्रयोगा

---

३० मु० उ०—२।२।३

लौकिककविकृता एतदीया प्रयोगा इवैवातीव रमणीया सन्ति, येषां कानिचिन्निदर्शनानि अस्मिन्नेव लेखे उपरिष्टाद् मयोद्धृतेषूदाहरणेषु द्रष्टुमपि शक्यन्ते। परमीदृशानि स्थलानि समस्तो एव वैदिके वाङ्मये सन्ति न्यूनान्येव। अतोऽहमिममेव निष्कर्षं प्राप्नोमि यद् वैदिकवाङ्मये ननु सर्वविधानामाधुनिकानामलङ्काराणामाशा विधेया, न वा तत्र सर्वथा अलङ्कारराहित्यमेव परिकल्पनीयम्। स पुरातनो युग आसीत्, तस्मिन् ब्राह्मी सृष्टिरिव कविसृष्टिरपि सरलासीत्, मानवसम्पदिव कविसम्पदपि विरलासीत्, लौकिकजगदिव च साहित्यिकसंसारोऽपि स्वल्पसंभार एवासीत्। अत एवातिचिरन्तने तदानीन्तने समये यथा साम्प्रतिकस्य लौकिकस्य भौतिकस्य वा युगस्य नानाविधानां पदार्थजातानामविकलायाः सत्ताया आशा विश्वासौ नैव विधीयेते निष्पक्षैर्धीधनैः, तथैव साम्प्रतिकस्य साहित्यिकसंसारस्यापि नानाविधाया अलङ्कारसम्पत्तेरपि तत्राशाविश्वासौ नैव विधेयौ। किन्त्विदं निश्चप्रचमेव ज्ञेयं यत् तदानीन्तने युगे साम्प्रतिकस्य साहित्यिकक्षेत्रस्यालङ्कारमहीरुहो जन्म लब्धवानासीत्, स च स्वीयविभिन्नभेदशाखा-प्रशाखोद्भेदोन्मुखोऽप्यासीदित्यत्र नास्ति कश्चित् संशीतेरवसर इति स्वमनसि निर्णीय विरमामि विस्तरात्।•

---

• यह शोधलेख सारस्वती सुषमा (वाराणसी), १९७८।१-२(संयुक्ताङ्क) में प्रकाशित है।

# सस्कृत साहित्य मे उपन्यास : धनपाल की तिलकमंजरी के परिपेक्ष्य मे

आज के साहित्य-समीक्षको मे एक नितान्त भ्रान्त धारणा फैलती जा रही है, और वह भ्रान्त धारणा यह है कि प्राचीन सस्कृत गद्य-साहित्य मे औपन्यासिक विधा का अभाव है।[1] अपनी इस धारणा की पुष्टि मे उनका आशय है कि आज उपन्यासो का जो स्वरूप है उसमे जन-जीवन की व्याख्या मिलती है, साथ ही साथ मानवता की पृष्ठभूमि मे समाज के पारिवारिक, आर्थिक राजनैतिक, सास्कृतिक, मनोवैज्ञानिक आदि भिन्न-भिन्न पहलुओ के गुण और दोषो पर रोचक रीति मे प्रकाश डाला जाता है, अर्थात मानवमात्र की सभी व्यावहारिक गतिविधियो का विश्लेषण देखने को मिलता है, किन्तु सस्कृत साहित्य मे ऐसी मानव मीमासा का अभाव रहता है। वहाँ के कथानक सिर्फ राजघरानो से ही सम्बन्ध रखते हैं, और वे भी केवल इस अर्थ मे, कि किसी राजकुमार ने किसी राजकुमारी को कैसे प्राप्त किया। उनमे प्राकृतिक वर्णन, वस्तुवर्णन और पात्रो के शारीरिक सौन्दर्य वर्णन की इतनी भरमार रहती है कि कथानक का तो बार-बार गला ही घुटता नजर आता है। हाँ, उनके ये वर्णन होते बड़े ही प्रौढ़ है। शब्दशय्या तो बस देखते ही बनती है। लेकिन सामान्य जन जीवन की ओर उनमे फूटी आँख से भी नही देखा जाता। ऐसी हालत मे उनके उन उदात्त और रसप्लावित वर्णनो को देखकर वासवदत्ता, कादम्बरी, तिलकमजरी आदि कथाकृतियो को गद्यकाव्य तो कहना चाहिए पर उपन्यास नही।

---

१ (क)—डॉ० (श्रीमती) ओमशुक्ल हिन्दी उपन्यास की शिल्पविधि का विकास, पृष्ठ स० ३८, ४१

(ख)—डा० हजारी प्रसाद द्विवेदी साहित्यसहचर, पृ० स० १०१

(ग)—डा० लक्ष्मीनारायणलाल हिन्दी कहानियो की शिल्पविधि का विकास, पृ० स० १६

लेकिन गम्भीरता के साथ विचार करने से उनकी यह उपर्युक्त धारणा विवेकपूर्ण प्रतीत नही होती है। मैं मानता हूँ कि सस्कृत की पुरातन कथा-कृतियो मे प्रकृति की छटा और नायक-नायिकाओ की रूप-माधुरी की बेहद भरमार है, वाक्यविन्यास भी अलकारो से काफी बोझिल है, पर इसका मतलब यह तो हरगिज नही लेना चाहिए कि उनमे उपन्यास के सघटनात्मक तत्त्वो का अभाव है। आप **वासवदत्ता, कादम्बरी, अवन्तिसुन्दरी तिलक-मञ्जरी, गद्यचिन्तामणि, मन्दारमञ्जरी** आदि सस्कृत की किसी भी कथाकृति को लीजिए, उसमे एक सुनियोजित कथावस्तु, व्यक्तित्वशाली पात्र और उनकी अपने ढग की एक शैली आपको अवश्य ही मिल जाएगी। रहा देश, काल और उद्देश्य, सो उसका भी उनमे अभाव नही है। हाँ, इतना अवश्य है कि उनका प्रधान उद्देश्य, अपनी कला का प्रदर्शन ही था। गौणरूप से भी वे अपने आश्रयदाता राजाओ और विद्वानो के मनोरजन मे ही अपनी सर्जना की इतिश्री समझते थे।

इस सदर्भ मे हम यह नही भूल जाना चाहिए कि वह जमाना राजतन्त्र का था। अच्छे लेखको को राजाओ का प्रश्रय एव सम्मान प्राय प्राप्त हो ही जाता था। फलस्वरूप राजप्रासादो की विलासिता को देखते-देखते लेखको की बाहरी आखो के समान भीतरी आँखें भी राजघरानो के उदीयमान राजकुमारो और राजकुमारियो के प्रणयचित्रण तक ही सीमित हो जाती थी। साधारण जनसमाज की आवश्यकताओ, इच्छाओ और रुचियो की ओर ध्यान देने के लिए न तो उनके पास समय था और न उनका परिवेश ही ऐसा था कि वे उधर ध्यान देते। इसके अतिरिक्त एक सबसे बडी बात यह थी कि वह समाज उन्नीसवी और बीसवी शताब्दी के समाज के समान जटिल भी नही था। उस समय न तो अभाव का ताण्डव था और न विषमता की खाई। परिवार मे नारियो मे और शूद्र कहे जाने वाले व्यक्तियो मे असन्तोष किवा उत्पीडन नही था। जनसाधारण मे सामाजिक और आर्थिक मान्यताओ के प्रति किसी भी प्रकार का प्रश्नवाचक चिह्न नही था। ऐसे परिवेश मे राजा-महाराजाओ के आश्रित रहने वाले सस्कृत के कथाकारो के सामने अपनी कृतियो मे केवल राजकुमारो और राजकुमारियो के प्रणयपरिपाक के अतिरिक्त वर्णन के लिए विषय ही क्या रह गया था? और इसी का परिणाम यह हुआ होगा कि राजमहलों के चन्दा और तारे (राजकुमार और राजकुमारियाँ) ही उनकी कथाकृतियो के प्रमुख पात्र हो गए।

जिस प्रकार आज के उपन्यासकारो की कृतियो मे समाज, परिवार, नारी और अर्थव्यवस्था को लेकर दी गई या दी जाने वाली अभिव्यक्ति इस युग और इस परिवेश की ही पुकार है, ठीक उसी प्रकार सस्कृत की वासवदत्ता, कादम्बरी, तिलकमञ्जरी, मन्दारमञ्जरी आदि पुरातन कथाकृतियो मे उपलब्ध होने वाली कलापक्षीय प्रबलता भी उस युग और उस परिवेश की ही देन माननी चाहिए, क्योंकि साहित्यकार की सर्जना पर उसके युग और परिवेश का प्रभाव अवश्य ही पडता है।

किसी भी कृति को उपन्यास की सज्ञा प्राप्त करने के लिए यह जरूरी नही होता कि उसके पन्ने नारियो और गरीबो के आसुओ से अवश्य ही गीले किए जायें, और न यही जरूरी होता है कि दाम्पत्य सूत्र मे बँधने के लिए उद्यत युवा और युवती को समाज और धर्म के ठेकेदारो द्वारा इसलिए सताया हुआ दिखाया जाए कि वे दोनो विजातीय हैं। इसी प्रकार रोटी और रोजी के लिए सघर्ष दिखाना ही उपन्यास का काम नही है।

यहाँ मेरा मतलब यह हरगिज नही है कि उपन्यास के विषय गरीबो की आहे और नारियो के आसू नही होते। य होते है और खूब होते हैं, पर सिर्फ यही होते है, यह मैं नही मानता, क्योकि इनके अतिरिक्त भी उपन्यासो के बहुतेरे प्रतिपाद्य विषय होते है, जिनमे उच्च कोटि की साहित्यिक और रोमाटिक कथा का वर्णन भी सम्मिलित है। यही कारण है कि उपन्यासो के प्रकार भी कई माने गए हैं।

हम देखते हैं कि पुराने जमाने के मनुष्यो म और आज के मनुष्यो मे जमीन आसमान का अन्तर है। भाषा, भावना, वेशभूषा, खान पान और रहन-सहन मे आज का मनुष्य पुराने जमाने के मनुष्यो मे बिलकुल भिन्न है। पर इतना सब कुछ होने के बावजूद भी जहाँ तक मनुष्य होने का दावा है, वह दोनो म समान है। क्योकि मनुष्य की जो आधारभूत पहचान है वह है उसका शारीरिक ढांचा, और वह उन (पुराने और नए मनुष्य) मे एक सा ही है। इसलिए अन्तर होने के बावजूद भी हम पुराने जमाने के मनुष्यो को भी मनुष्य ही कहकर पुकारते हैं। ऐसा हम कभी नही सोचते हैं कि सामाजिक और आर्थिक जटिलताओ से घिरा हुआ आज का मनुष्य ही मनुष्य है, और जो सरल और सन्तोषपूर्ण जीवन बिताता रहा है, वह मनुष्य नही बल्कि कुछ और रहा होगा।

भाषा, भाव और रहन-सहन के ढग मे अन्तर होने के बावजूद भी पुराने समय के लोगो को भी मनुष्य कहने का यह सिद्धान्त उपन्यास के क्षेत्र मे, पता नही क्यो लागू नही किया जाता। यदि गहराई से देखा जाए तो पता चलेगा कि उपन्यास का आधारभूत तत्त्व है गद्यात्मक कथानक। रहा इसका प्रतिपाद्य विषय और प्रस्तुतीकरण, सो उपन्यासकार के पर्यावरण पर निर्भर रहता है। इस दृष्टि से यदि हम देखते हैं तो पता चलता है कि आज के उपन्यासो की भाति ही सस्कृत की वासवदत्ता, कादम्बरी, तिलकमञ्जरी आदि पुरातन कथाकृतियो मे भी एक सुनियोजित और दूरगामी गद्यात्मक कथानक का ढांचा है। भले ही उन कथानको का प्रतिपाद्य विषय और उनके प्रस्तुतीकरण का ढग उनका अपना अलग हो। फलस्वरूप आज के साहित्य-समीक्षको को चाहिए कि वे वासवदत्ता, कादम्बरी, तिलकमञ्जरी मन्दार-मञ्जरी आदि सस्कृत की पुरातन कथाकृतियो को भी औपन्यासिक विधा मे गिनें और उन्हे उपन्यास की सज्ञा देने का न्यायसगत साहस करे। क्योकि साहित्य की जिस विधा को वे आजकल उपन्यास का नाम दे रहे है, पुराने जमाने मे उसे ही गद्यकाव्य की सज्ञा मिली थी। फलस्वरूप आज के उपन्यास और तब के गद्यकाव्य मे कोई मौलिक भेद नही है। अब जहाँ तक मेरी समझ का प्रश्न है, तो मैं यही कहूँगा कि कादम्बरी और तिलकमञ्जरी जैसी कथा-कृतियो को उपन्यास कहना उतना ही औचित्यपूर्ण है जितना कि पुराने जमाने के लोगो को भी मनुष्य कहना।

सम्भव है कि नवीनता के नशे मे मस्त रहने वाले और भारत के अतीत की अच्छाइयो पर परदा डालने मे ही अपनी विद्वत्ता की निष्पक्षता का ढोल पीट कर अन्तरराष्ट्रिय यश को पाने की घात मे लगे रहने वाले कतिपय मनीषी मेरे इस सिद्धान्त से नाक-भौ सिकोडें और इस सकीर्णता या पूर्वाग्रह का नाम देने की बात सोच उठे, लेकिन मेरा यह दृढ विश्वास हैं कि यदि वे उपन्यास की शाश्वत आत्मा को ध्यान मे रख कर कादम्बरी, तिलकमञ्जरी आदि सस्कृत की पुरातन कथाकृतियो को परखने का सही-सही प्रयत्न करेंगे तो उन्हे उन कृतियो मे भी उपन्यास की आत्मा का दर्शन अवश्य ही होगा। हाँ, पश्चिम की भक्ति मे कमी आती देखकर वे उस आत्मा को देखा अनदेखा कर दें, यह बात और है।

हर्ष का विषय है कि आज भी साहित्यिक समीक्षा के क्षेत्र मे सही बात कहने का रिस्क उठाने वाले कुछ लोग है। हम अपने इस प्रकरण मे डा०

सत्येन्द्र के नाम और विचारो को उद्धृत करने का लोभ रोक नही पा रहे हैं। उन्होंने संस्कृत की कथाकृतियो का गहन अध्ययन करने के पश्चात अपनी आत्मा मे उठी हुई आवाज को दबाया नही, बल्कि डके की चोट पर लिख दिया—

"संस्कृत मे साहित्यिक कहानियां हैं, जिनमे वस्तुत उपन्यास की परम्परा छिपी है। दशकुमारचरित, कादम्बरी आदि प्राचीन उपन्यास हैं। उपन्यास का आधुनिक ढांचा योरोप मे अवश्य आया, परन्तु मूल रूप मे भारत ने कादम्बरी, दशकुमारचरित जैसे उपन्यासो को पहले ही जन्म दिया है।"[२]

इस उद्धरण से साफ जाहिर होता है कि डॉ० सत्येन्द्र संस्कृत की कादम्बरी आदि गद्यात्मक कथा कृतियो को उपन्यास मानते हैं, जो सोलहो आने ठीक है।

डॉ० शान्तिभारद्वाज[3] और डॉ० मक्खनलाल शर्मा[४] के भी विचार कुछ इसी प्रकार के हैं। दोनो हाथो से तलवार चलाने वाले वीरगाथाकालीन राजपूत योद्धा की भांति संस्कृत और हिन्दी - दोनों ही भाषाओ मे साहित्य-सर्जना करने वाले प्रसिद्ध साहित्यकार प० अम्बिकादत्त व्यास ने गद्य-काव्य के जो तमाम भेद किए है, उनमे उन्हें क्या पुरातन और क्या आधुनिक सभी प्रकार की गद्यकृतियो का समावेश अभीष्ट था। उनकी दृष्टि मे भी वासवदत्ता, कादम्बरी, शिवराजविजय आदि कलाकृतियां उपन्यास की संज्ञा पाने की अधिकारिणी है। अपने विचारो को उन्होंने इस प्रकार प्रकट किया है—

" जो गद्यो मे ही शोभित हो उसे गद्यकाव्य कहते हैं। यहां श्रव्यग्रन्थरूप गद्यकाव्य का विचार किया जाता है। इसी गद्यकाव्य को उपन्यास कहते हैं —जैसे कादम्बरी अथवा मेरा रचित शिवराजविजय इत्यादि।"[५]

अब इसी पृष्ठभूमि म धनपालकृत तिलकमजरी की कथा की औपन्यासिकता का प्रश्न हमारे सामने आ जाता है। जहां तक उसकी औपन्यासिकता (अर्थात् उपन्यास कहलाने) की बात है, मैं समझता हूं कि उपर्युक्त विवेचना

---

२ समीक्षा के सिद्धान्त, पृ० स० १५१

३ हिन्दी उपन्यास, प्रेम और जीवन, पृ० स० ३३

४ हिन्दी उपन्यास सिद्धान्त और समीक्षा, पृ० स० २३१

५ गद्यकाव्य मीमासा पृ० स० ३२-५३

के पश्चात् अब इस तथ्य मे कोई सन्देह नही रह जाता कि तिलकमञ्जरीकथा अपने शुद्ध रूप मे सस्कृत भाषा मे लिखा गया एक अति परिष्कृत, सुनियोजित एव रोचक साहित्यिक उपन्यास है। इसकी सुसगठित एव कौतूहलवर्धक कथावस्तु, अनुपम व्यक्तित्व से परिपूर्ण पात्र, चुटीले और चुभते हुए कथोपकथन, प्रभावपूर्ण भाषा और शैली, देश-काल की उपयुक्तता और कलात्मक उद्देश्य को देखकर भला ऐसा कौन होगा जो इस सर्वाङ्गसुन्दर उपन्यास मानने से इन्कार करेगा ? इसमे जहाँ एक ओर सहृदय समाज को आनन्दित और आकृष्ट करने की पूरी-पूरी क्षमता है, वहाँ दूसरी ओर धार्मिक और दार्शनिक व्यक्तियो को भी सन्तुष्ट करने की सामर्थ्य है। इस दृष्टि से हम चाहे, तो कह सकते है कि धनपाल ने अपनी इस तिलकमञ्जरीकथा मे साहित्य के जगमगाते हुए मन्दिर मे धर्म और दर्शन के छोटे-छोटे दो घृत-दीप भी जलाने का प्रयत्न किया है।

## आज के उपन्यासो से तिलकमञ्जरी की तुलना

अब रही बात उसकी आज के उपन्यासो से तुलना की, सो इस सम्बन्ध मे मेरा विचार है कि तिलकमञ्जरी-कथा साहित्यिक एव रोमाटिक उपन्यास होने के कारण आज के इन ज्वलन्त समस्यामूलक उपन्यासो से काफी भिन्न पड जाती है।

आज के उपन्यास धर्म और आदर्श की सुनहरी शृखलाओ मे जकडी हुई मानवता को मुक्त करके उसे यथार्थ, आत्मनिर्णय और सर्वोदय के खुले हुए हरे-भरे मैदान मे मस्ती से घुमाने की बात कह रहे है। इनमे कला का प्रदर्शन काव्य-कला के लिए नही, बल्कि जनजीवन को चित्रित करने के लिए ही किया जा रहा है। फलस्वरूप इनमे साहित्यिकता का अश उपेक्षित हो गया है। लेकिन जब हम 'तिलकमञ्जरीकथा' के वर्णन कौशल पर विचार करते है, तो पाते है कि उसमे साहित्यकार ने अपनी कला की अभिव्यक्ति प्रधान रूप से काव्यकला की ही श्रीवृद्धि के लिए की है। इसका प्रमुख कारण, जैसा कि मै इसी प्रकरण मे पहले लिख चुका हूँ, यही रहा होगा कि तत्कालीन समाज अपनी सामाजिक और धार्मिक मान्यताओ से सन्तुष्ट रहता होगा। उनमे रूढियो और प्रथाओ के लिए विद्रोह की भावना नही रही होगी। साहित्यकारो के कानो मे करुणक्रन्दन नही पहुँचता होगा। उनकी आँखो के सामने गरीबी और भुखमरी का नगा नाच नही होता होगा।

इसलिए वे निश्चिन्त होकर बड़े आराम से कला और सरस्वती की आराधना करते रहे होंगे। यही कारण है कि धनपाल की तिलकमञ्जरीकथा मे साहित्यिक माधुरी का आस्वाद तो पदे-पदे प्राप्त होता है, पर उसमे आज के उपन्यासो की तरह किसी समस्या का उत्थान और समाधान होता हुआ नजर नही आता है। ऐसी स्थिति मे उसकी आज के इन समस्यामूलक उपन्यासो से तुलना करना कुछ उचित नही प्रतीत होता।

हालाकि तिलकमञ्जरीकथा मे भी सपने मे समरकेतु के प्रथम दर्शन पर तथा वज्रायुध के साथ विवाह करने के लिए तैयार हो जाने की पिता की आज्ञा सुनने पर मलयसुन्दरी के विचारो और क्रियाकलापो के माध्यम से धनपाल ने वैवाहिक निर्णय मे युवा-युवतियो की मनोभावना को आदर देने का अच्छा-खासा प्रयास किया है, और इसी प्रकार वणिक्पुत्र तारक और शूद्र-कन्या प्रियदर्शना के प्रेमविवाह की चर्चा करके उन्होने अन्तर्जातीय विवाह की भी सम्भावना को पाठको के समक्ष लाने का प्रयत्न किया है, लेकिन उनके ये दोनो ही प्रयत्न उनके उपन्यास को प्रमुख समस्या बनने का कोई दावा नही कर सकते हैं। हाँ, समाज के एक पहलू के हलके आभास मात्र अवश्य ही कहे जा सकते हैं।

## धनपाल और आज के उपन्यासकार

मन्दिर के पूर्णकाम पुजारी और समाजवाद का सपना देखने वाले लोगो मे जो अन्तर होता है, धनपाल और आज के इन उपन्यासकारो मे भी वही अन्तर है। धनपाल अपने आप मे पूर्णतया सुखी और सन्तुष्ट थे। उन्हें राजा भोज का अनुपम आश्रय प्राप्त था। उनका पर्यावरण अभावो और कुण्ठाओ से सर्वथा मुक्त था। अत उनकी दृष्टि जीवन के उदात्त एव आह्लादपूर्ण पक्ष पर ही गई। जबकि आज के उपन्यासकारो के सामने ही नही, बल्कि चारो ओर सामाजिक एव आर्थिक विषमताओ की महामारी मुह खोले हुए खडी है। आज समाज की अधिकाश मान्यताओ के सामने प्रश्नवाचक चिह्न लग चुका है। ऐसी हालत मे आज के उपन्यासकारो की लेखनी, हम देखते हैं कि वर्ग विशेष की पीडाओ और आँसुओ को पोछने मे ही लग गई है, और यह स्वाभाविक एव आवश्यक भी है।

धनपाल ने अपने इस उपन्यास मे भूलोकनिवासी राजकुमार हरिवाहन की प्रणयलता को विद्याधरो के सुरम्य एव उर्वर देश मे अकुरित, पल्लवित

एवं पुष्पित करके यह सिद्ध करना चाहा है कि अपनी यह धरती भी अन्य उत्कृष्ट लोकों की तरह स्पृहणीय है। उपन्यासकार की दृष्टि से धनपाल साहित्यिक उपन्यासकारों की ही कोटि में गिने जाने योग्य हैं। क्योंकि उन्होंने अपनी कृति में कथावस्तु को सरस एवं साहित्यिक स्वरूप प्रदान करने का ही विशेष प्रयत्न किया है।

लगता है कि धनपाल के समय में धार्मिक मान्यतायें काफी दृढ थीं। लोग उनमें विश्वास भी खूब करते थे। इसलिए धनपाल ने लक्ष्मी और जिनेन्द्र भगवान् की आराधना को मनोरथों की पूर्ति का साधन साबित किया है। लेकिन आज चूँकि धर्म पाखण्ड का रूप ले चुका है, और भोली-भाली जनता को ठगने का साधन बन चुका है, इसीलिए आज उपन्यासकारों को उसका विरोध करना पड रहा है जो किसी हद तक ठीक भी है।

धनपाल ने अपने कथानक में गति लाने के लिए जिन पात्रों की परिकल्पना की है उनमें अधिकांश या तो राजमहलों में रहने वाले हैं, या फिर राजमहलों से सम्बन्ध रखते हैं। वह स्वयं भी भोज जैसे राजा के अनन्य कृपापात्र रहे हैं। चूंकि राजाओं, राजकुमारों और राजकुमारियों के ललित मनोभावों की उन्हें काफी गहरी जानकारी रही है, इसीलिए उन्होंने अपनी साहित्यिकता के सुनहले धागे में प्रणय के मोती पिरोकर सहृदय एवं रसिक पाठकों के कण्ठ की शोभा बढाने के लिए तिलकमञ्जरी कथा के रूप में एक ऐसी मनोहर माला तैयार की है जिसके विषय में आज के ये उद्भिन्न साहित्यकार एवं उपन्यासकार सोच भी नहीं सकते। उपन्यासकार सम्राट् प्रेमचन्द से लेकर आज गुलशन नन्दा तक ऐसा एक भी उपन्यासकार नहीं दिखाई देता जो कथावस्तु की उदात्त परिकल्पना एवं उसकी साहित्यिक अभिव्यंजना के क्षेत्र में धनपाल की बराबरी कर सके।

हाँ, यह बात और है कि धनपाल अपनी तिलकमञ्जरीकथा में सामाजिक एवं आर्थिक समस्याओं की कटुता एवं विषमता को आज के उपन्यासकारों की भांति मार्मिक अभिव्यक्ति देने में असमर्थ रहे हैं। पर इसमें धनपाल का दोष भी क्या है? वह समाज ही ऐसा सन्तोषी था कि उसमें इनके प्रति आक्रोश की तो बात रही दूर, किसी प्रकार का प्रश्नवाचक चिह्न तक न था। यही कारण था कि धनपाल की कला प्रमुख रूप से काव्य-कला की ही साधना में लगी रही।

